# प्रश्नोत्तरपयोनिधिः ।

॥ श्री[illegible]या [illegible]कृष्णेष्टदेवेभ्यो नमोनमः ॥ श्रीमच्छारदचन्द्रास्यं [illegible]पत्रोपरु[illegible]कम् ॥ नवीननीरदश्यामं सांद्रस्निग्धसितांशुकम् ॥ १ ॥ धम[illegible]प्रभवं नत्वा हरिमिष्टप्रदं मुदे ॥ शेमुषीशालिनां सो प्रश्नो[illegible]म् [illegible]निधिम् ॥ २ ॥

अथ प्र[illegible]आरभ्यते—ननु 'वागर्थाविव' इत्यत्रेव 'उद्बाहुरिव वामनः' इत्यत्रापीवेन सह समासो विभक्त्यलोपश्च कुतो न ॥ तद्व्याख्यायां मल्लिनाथेनैवमन्यत्रापि द्रष्टव्यमित्युक्तत्वादिति चेच्छृणु ॥

अथोत्तरमारभ्यते—इवेन सह समासस्य नित्यसमासातिरिक्तत्वेन वैकल्पिकत्वादुद्बाहुरिव वामन इति व्यस्तप्रयोग एव ॥ तत्र समासत्वे तु वागर्थवद्वामनपदस्यापि पूर्वनिपातत्वेन उद्बाहुर्वामनः इवेत्यनिष्टप्रयोगः स्यात् ॥

प्र०—अपिच वागर्थाविवेत्यत्र इवेन सह समासो विभक्त्यलोपश्चेत्यनेन समासावयवस्य सुपो लोपाभावविधानेऽपि समासस्य प्रातिपदिकसंज्ञत्वेन तदुत्पन्नस्य सुपः प्रत्ययस्य कथं लुक् ॥ इवशब्दस्याव्ययत्वेन तदुत्तरीभूतस्य सुपः 'अव्ययादाप्सुपः' इत्यनेन लुगिति चेन्न ॥ वागर्थाविवेति समस्तपदस्य प्रातिपदिकत्वेन केवलेवशब्दात् सुपोऽनुत्पन्नत्वादिति चेच्छृणु ॥

उ०—उपसर्जनविधौ तदन्तसंज्ञानिषेधेऽप्यत्रानुपसर्जनत्वेन तदन्तसंज्ञाविधौ इवान्तस्य वागर्थाविवपदस्याव्ययत्वात्तदुत्पन्नस्य सुपो लुगिति बोध्यम् ॥

प्र०—अपिच ॥ 'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ॥ जगतः पितरौ वंदे पार्वतीपरमेश्वरौ' इत्यत्रोपमेयभूतयोः पार्वतीपरमेश्वरयोरुपमानत्वं वागर्थयोर्न संभवति ॥ कुतः [illegible]र्वतीपरमेश्वरयोः संपृक्तत्वं वरीवर्ति ॥ वागर्थयोस्तु संपृक्त[illegible] संघटते ॥ कुतः ॥ वागुच्चरितः शब्दो मुखे तिष्ठति अर्थस्[illegible]न्यस्थले दृश्यते ॥ तदेव दर्शयति ॥ घट इत्युच्यमाने घटश[illegible] मुखेऽस्ति ॥ घटशब्दस्यार्थो घटस्तु कुलालवेश्मनि वर्त्तते ॥

उ०—नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो ना[illegible]र्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति ततोऽर्थसंयुक्तशब्दोत्पत्तिरिति नित्यसंबन्धेन शब्दार्थयोः संपृक्तत्वं वरीवर्ति ॥ तथैवोक्तं मीमांसकैः नित्यः शब्दार्थसंबन्ध इति ॥

प्र०—रघूणामन्वयं वक्ष्ये इति रघुवंशे ॥ निरुध्यमाना यदुभिः कथंचिदिति माघे च ॥ रघुयदुरूपैकैकार्थवाचकाभ्यां रघुयदुशब्दाभ्यां रघूणामिति यदुभिरिति कथं बहुवचनमिति चेच्छृणु ॥

उ०—रघुयदुशब्दयोस्तदवयवापत्ये लक्षणया रघूणां यदुभिश्चेति बहुवचनान्तप्रयोग इति समाधेयम् ॥

प्र०—'अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् वनाय पीतप्रतिबद्धवत्सां यशोधनोधेनुमृषेर्मुमोच' इतिरघुवंशश्लोकस्थजायाप्रतिग्राहितगन्धमाल्यामिति पदे ण्यन्तावस्थस्य ग्राहेर्धातोर्द्विकर्मकत्वं संमतं तथा सत्यत्रैककर्मकत्वं कथं दृश्यतेइतिप्रश्नः॥

उ०—तथापि बहूनामसंमतत्वादत्रैककर्मकत्वमवसेयम् ॥ अन्यथा तत्र क्तप्रत्ययेन प्रयोज्यकर्त्र्याः धेनोरुक्तकर्मत्वं स्यात् 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ॥ अप्रधाने दुहादीनां ण्यन्ते

---

१ धातूनाम् ।

कर्तुश्च कर्मणः' इति वचनात् ॥ एवं च जायया गन्धमाल्ये प्रतिग्राहिते इति विरुद्धविग्रहः स्यात् व्यधिकरणत्वादन्यपदार्थाभावाच्च जायया प्रतिग्राहिते गन्धमाल्ये ययेतीष्टो बहुव्रीहिर्न स्यात् ॥ अतो बोधनातिरिक्तार्थस्य ग्राहेरेककर्मकत्वे हि क्तप्रत्ययेन गन्धमाल्ययोरुक्तकर्मकत्वाज्जायायाः प्रयोजककर्त्रीत्वाद्धेनोः प्रयोज्यकर्त्रीत्वाच्च जायया प्रतिग्राहिते गन्धमाल्ये यया सेति विग्रहस्य सौष्ठवं सिद्धम् ॥ कथं तर्हि 'अयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इति कुमारसंभवश्लोकवाक्ये ग्राहेर्द्विकर्मता श्रूयते इति चेच्छृणु ॥ तत्र ग्राहयितुमित्यस्योद्वाह्यत्वेन बोधयितुं न शशाकेति बोधनार्थत्वात् ग्राहेर्द्विकर्मकत्वम् ॥ बोधनार्थस्य ग्राहेस्तु द्विकर्मता 'गतिबुद्धिप्रत्यवसानार्थ' इत्यादिसूत्रेण सिद्धा । ग्रहणार्थस्यैककर्मतेत्याकरग्रन्थसिद्धान्त इति समाधानम् ॥ पीतप्रतिबद्धवत्सामिति पदे पीतशब्दस्य व्युत्पत्तिः कथमिति चेदुच्यते । पीयते इति पीतं पीतं पानमस्यास्तीति पीतः । जलपानवानित्यर्थः । अत्र भावे क्तप्रत्ययः ततोऽर्शआदिभ्योऽच् । ननु सकर्मकात् पिबतेः कथं भावे क्तप्रत्ययः इति चेदुच्यते 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति वाक्यात् कर्मणोऽविवक्षितत्वेन स तु ज्ञेयः । यद्वा पीयतेसौ पीतः कर्मणि क्तः स तु कर्तरि कर्मधर्मोपचारत्वेन पीतोदकोऽपि पीतः इत्युच्यते । कृद्वृत्तिगतं पीतत्वं तत् कर्तरि वत्से ह्युपचर्यते उभयत्रापि पीता गावो, भुक्ता ब्राह्मणा, विभक्ता भ्रातर इत्यादिभाष्यप्रयोगवत् साधुत्वं तत्रैव भाष्यकारेणेत्थं स्फुटीकृतं यद्धनस्य विभक्तत्वं तत् भ्रातृषूपचर्यते पीता गाव इत्यत्र उदकस्य पीतत्वं गोष्वारोप्यते भुक्ता ब्राह्मणा इत्यत्रान्नस्य भुक्तत्वं ब्राह्मणेषूपचर्य-

ते अथवा उत्तरपदलोपोऽत्र द्रष्टव्यः । पीतं उदकं येन स पीतः पीतोदकोपि पीतः ॥ अत्र लोपशब्दार्थमाह कैयटः । गम्यमानस्याप्रयोग एव लोपोऽभिमतः यथा विभक्तधनाः विभक्ताः पीतोदकाः पीताःभुक्तान्नाःभुक्ता अथवा पिबतीति पीतःपीतवान्।अत्र सकर्मकादपि कर्तरि क्तः । पूर्वोक्तकारिकावाक्येन कर्मणोऽविवक्षितत्वात्

प्र०—'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्यनेन बह्वर्थवाचकतद्राजसंज्ञकड्यण् प्रत्ययस्य लुकि प्राप्ते सति ॥ 'तस्यामेव रघोः पाण्ड्याः प्रतापं न विसेहिरे' इति रघुवंशचतुर्थसर्गश्लोके पाण्ड्या इत्यत्र पाण्डव इति प्राप्ते कथं पाण्ड्या इति निष्पन्नमिति चेच्छृणु ॥

उ०—'पाण्डोर्ड्यण्'इत्यनेनैकार्थवाचकतद्राजसंज्ञकड्यणप्रत्ययं कृत्वा तदनन्तरं 'तत्र साधुः' इत्यनेन साध्वर्थे बह्वर्थवाचकाणप्रत्यये कृते पाण्डूना जनपदानां राजा पाण्ड्यः पाण्ड्ये साधवः पाण्ड्या इति व्युत्पत्त्या पाण्ड्या इत्यस्य सिद्धिः इति समाधानम् ॥

प्र०—'अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथास्यात्' इत्यत्र 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च'इति सूत्रेण श्रमेणेत्यत्रालंयोगे चतुर्थी कथं न ॥ अपिच 'साधकतमं करणम्' इति सूत्रेण यत्क्रियासिद्धौ प्रकृष्टोपकारकमस्ति तस्य करणसंज्ञा विहिता अत्र तु क्रियैव नास्त्यतः कथं करणत्वमिति प्रश्नद्वयम् ॥

उ०—'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरे अलंशब्दो भूषणाद्यर्थवाचकोऽस्ति ॥ ततः 'नमःस्वति' इति सूत्रेऽलंशब्दः पर्याप्त्यर्थवाचको ग्राह्यः न तु निषेधार्थवाचकः ॥ अलमिति पर्याप्त्यर्थग्रहणमिति कौमुद्यामुक्तत्वात् ॥ अलं श्रमेणेत्यत्र तु निषेधार्थमलमस्त्यतस्तद्योगेन चतुर्थीति ॥ अत्र गम्यमानसाधनक्रियाकारकविभक्तौ प्रयोजिकेति वाक्यात् ॥ गम्यमानसाधनक्रियां

प्रति श्रमस्य करणत्वम् ॥ तथैवोक्तं नासोद्योते ॥ 'न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्यापि तु गम्यमानापि' इति ॥ अतोऽत्र श्रमेण साध्यं नास्तीति गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात्तत्र करणे तृतीयेति समाधेयम् ॥

प्र०—किंच ॥ 'हंसीव कृष्ण ते कीर्तिः स्वर्ग गामवगाहते' इत्यत्र 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यनेन कृष्णपदस्याविद्यमानवत्वेऽपि हंसीवेत्यस्य विद्यमानवत्त्वेन तेआदेशो यथा कृतः तथैवा'लं महीपाल तव श्रमेणे'त्यत्र महीपालपदस्याविद्यमानवद्भावेऽप्यलमित्यस्य विद्यमानवद्भावात् ॥ 'तेमयावेकवचनस्य' इतिसूत्रेण तेआदेशः कथं न ॥ किंच ॥ 'तर्क न रोचतेऽस्माकम्' इत्यत्रापि नः आदेशः कथं न इति प्रश्नः ॥

उ०—'एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः' इति वार्तिके ॥ अनन्वादेशे एते आदेशा विकल्पेनोक्ताः॥अतो विवक्षया एते क्वचित्स्युःक्वचिदविवक्षया न स्युरित्यवसेयमिति समाधानम् ॥

प्र०—ननु 'हरिर्हरिप्रस्थमथ प्रतस्थे' इत्यत्र ॥ 'ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम्' इत्यत्र ॥ 'भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम्' इत्यादिषु ॥ 'ष्ठा गतिनिवृत्तौ' इति धातोः सकर्मकत्वं दृश्यते ॥ अपिच ॥ 'पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना' इति ॥ 'प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थानमाचरेः' इत्यादौ स्थाधातोरकर्मकत्वं दृश्यते ॥ अतः स्थाधातुः किं सकर्मकः वा किमकर्मक इति प्रश्नः ॥

उ०—'हरिर्हरिप्रस्थमथ प्रतस्थे' इत्यादावध्याहृतप्रतियोगे एव द्वितीया ॥ यत्र कर्मणः प्राप्तिः संभवति तत्र स्थाधातोः सकर्मकत्वमवसेयम्॥नन्वकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्यो-

ऽध्वा च कर्मसंज्ञकइतिवाच्यमितिवार्तिकेनहरिप्रस्थादीनांकर्मत्वा-त्तत्र द्वितीया स्यादेव किमर्थमत्र प्रतेरध्याहारः कृत इति चेच्छृणु ॥

उ०–हरिप्रस्थादीनां दूरदेशानां कुरून् स्वपितीतिवत्प्रतस्थे इत्यनेन योगासंभवान्न तद्योगे द्वितीया वक्तुं युक्ता ॥ प्रतस्थे स्थलवर्त्मनेत्यादिषु प्रस्थानं हि चलनमात्रं नतु कर्मप्राप्तिसंपृक्तगम-नमित्यकर्मकत्वमिति समाधानम् ॥

प्र०–'उद्वेजिता वृष्टिभिराश्रयंते शृंगाणि यस्यातपवन्ति सि-द्धाः' इति कुमारसंभववाक्यम् ॥ तत्र विजेः पर इडादिप्रत्ययो ङिद्वत् इत्यर्थकेन 'विजइट्' इति सूत्रेणेडादिप्रत्ययस्य ङिद्व-द्भावेऽपि उद्वेजिता इति गुणविशिष्टं रूपं कथमिति प्रश्नः ॥

उ०–णिच्प्रत्ययान्त उद्वेजीतिधातोः क्तप्रत्ययेनोद्वेजिता इति निष्पन्नम् ॥ ण्यन्तादिति भागवृत्तिरित्युक्तं कौमुद्याम् ॥

प्र०–'प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव' इ-तिभारविवाक्ये प्रविघाटयितेत्यत्र 'मितां ह्रस्व' इति सूत्रेण ह्रस्वता कुतो नेति प्रश्नः ॥

उ०–चौरादिकस्य 'घट संघाते' इति धातोरिदं रूपम् ॥ मित्संज्ञा तु 'घट चेष्टायाम्' इति भौवादिकस्यातो नात्र ह्रस्वः ॥ 'घट संघाते' इत्यस्य तु मित्संज्ञा निषिध्यते भट्टोजिदीक्षितेन ॥ तथाहि ॥ नच तस्यैवार्थविशेषे मित्वार्थमनुवादोयऽमिति वाच्यम् ॥ 'नान्ये मितोऽहेतौ' इति निषेधात् ॥ अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चक-व्यतिरिक्ताश्चुरादयो मितो नेत्यर्थ इति ॥ इत्थं समाधानम् ॥

प्र०–ननु 'निववृते स महार्णवरोधसः सचिवकारितबालसुतां-जलीन् ॥ समनुकंप्य सपत्नपरिग्रहाननलकानलकानवमां पुरीम्' इत्यत्र 'वृतु वर्तने' इति धातोः सकर्मकत्वं दृश्यते ॥ अपिच ॥

'रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्तते' इति ॥ 'निवृत्ततर्षैः' इत्यादावकर्मकत्वं दृश्यते ॥ इत्येकस्यैव निपूर्वस्य 'वृतु वर्तने' इति धातोः सकर्मकत्वाकर्मकत्वे कथं प्रतीयेते इति प्रश्नः ॥

उ०—'हरिर्हरिप्रस्थमथ प्रतस्थे' इत्यादाविव गम्यमानप्रतियोगे द्वितीयेत्यवगम्यम् ॥

प्र०—'अवजानासि मां यस्मादतस्ते न भविष्यति॥मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा' इति रघुवंशप्रथमसर्गश्लोकः॥ तत्रानाराध्येति ल्यबन्तकर्ता नृपः॥ न भविष्यतीति पदस्य कर्त्री प्रजेति भिन्नकर्तृकत्वात्॥ अनाराध्येत्यत्र समानकर्तृकयोर्धात्वर्थयोःपूर्वकाले विद्यमानाद्धातोर्विधीयमानस्यक्त्वाप्रत्ययस्यस्थाने॥'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इत्यनेन तदर्थको ल्यबादेशः कथमिति प्रश्नः॥

उ०—हेतुमण्णिजन्ताद्राधेर्विहितस्य क्त्वो ल्यबादेशः॥ तथाच राधेः प्रयोजककर्त्री प्रजेति न भिन्नकर्तृकत्वमिति दोषापत्तिः॥ यद्वा मत्प्रसूतिमनाराध्य वर्तमानस्येत्यध्याहारेण समानकर्तृकत्वमवगम्यम् ॥ यद्वा ॥ मदिति पृथक्पदं राध्यप्रजेत्येकं पदं ॥ प्रसूतौ मनो यस्येति प्रसूतिमनाः संतानाभिलाषी ॥ ऋतुस्नातां स्त्रियमभिजिगमिषुः सन् यस्मान्मामवजानास्यतो मत्तःसकाशात्॥राध्या श्रेष्ठा चासौ प्रजा च राध्यप्रजा ॥ राध्येत्यत्र 'पुंवत्कर्मधारय' इत्यादिना पुंवद्भावः॥तादृशी न भविष्यतीत्यन्वयः॥इति समाधानम्॥

प्र०—'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः॥ तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्' इति रघुवंशश्लोके पूर्वार्धे तु विषमालंकारो निःशङ्कतया प्रवर्तते॥तदुत्तरार्धे को वालंकार इति प्रश्नः

उ०—ललितालंकारोऽत्रावबोध्यः ॥ तत्प्रतिपादकानि लक्षणवा-

१ पुरुषस्य ।

क्यानि ग्रन्थान्तरेषु पुरुतराणि सन्ति ॥ तथापि मत्कृतालंकारेन्दुशेखरान्तर्गतं तत्प्रदर्श्यते ॥ 'वर्ण्यो यः प्रतिनिधिवर्णनं तु तस्य वाक्यार्थः किल ललितं मतं प्रसंगे' इति ॥ तस्यायमर्थः ॥ प्रसंगे प्रस्तुते वर्ण्यो वर्णनीयो यो वाक्यार्थः तस्य प्रतिनिधिवर्णनं यत्प्रतिविम्बस्य कथनं तत्तु किल निश्चितं ललितं मतमिति ॥ तत्तंल्लक्षणानुसारेणाऽत्र ललितालंकृतिरवसेया ॥ ईदृश्या मत्या सूर्यवंशं वर्णयितुमिच्छुरहमिति प्रस्तुतार्थानुपन्यासेन तत्प्रतिबिम्बभूतस्योडुपेन सागरं तितीर्षुरस्मीत्यप्रस्तुतार्थस्य वर्णनात् ॥ नन्वत्राप्रस्तुतप्रशंसालंकारः स्यादेवेति चेन्न ॥ 'पक्षिष्वेकः कृतार्थो यो घनादन्यं न याचते' इति प्रस्तुतप्रशंसायामप्रस्तुतस्यैव पक्षिणो वर्णनं कृतम् ॥ अत्र त्वहमस्मीति प्रकृतधर्मिनिर्देशात् ॥ तर्हि समासोक्तिः स्यादिति चेन्न सापि यत्र प्रस्तुतस्य वृत्तान्ते वर्ण्यमाने सति श्लेषे विशेषणसाम्येनाप्रस्तुतवृत्तान्तस्य प्रतीतिः स्यात्तत्र समासोक्तिरत्र तु तितीर्षुर्दुस्तरमित्याद्यप्रस्तुतवृत्तान्तवर्णनादेव प्रस्तुतवृत्तान्तस्य गम्यमानत्वात् ॥ नचात्र निदर्शना स्यादित्यपि शक्यम् ॥ शब्दगृहीतयोः प्रस्तुताप्रस्तुतवृत्तान्तयोरैक्यारोप एव तस्यालक्षणात् अत्र त्वप्रकृतवाक्यार्थवर्णनेन प्रकृतवाक्यार्थप्रतीतेश्च ॥ यदोपमानोपमेययोः शब्दोपात्तयोः सतोः प्रवर्तमान एवालंकार उपमानमात्रोपादानेपि स्यात् तदा भेदेऽप्यभेदरूपाया रूपकातिशयोक्तेरपि विषये रूपकमेव प्रवर्तेत ॥ अतोऽत्रालंकारान्तरासंकीर्णं ललितमेवेति समाधानम् ॥

प्र०—'अमरीकबरीभारभ्रमरीमुखरीकृतम् ॥ दूरीकरोतु दुरितं गौरीचरणपङ्कजम्' इति कुवलयानन्दकारिकावाक्ये परिणामालंकार



१ ग्रन्थान्तरीयमत्कृतालंकारेन्दुशेखरोक्तलक्षणानुसारेणेत्यर्थः ।

उतच रूपकालंकारोऽपि चोपमालंकारस्तेषु को वालंकार इति प्रश्नः

उ०—चरणभूतं पङ्कजं चरणपङ्कजम् ॥ पङ्कजं हि स्वयं दुरितं दूरीकर्तुमसमर्थं गौरीचरणरूपेण परिणम्य दुरितं दूरीकरोतीति परिणामालंकारः ॥ अत्र अचरणं चरणं संपद्यते तथाभूतमिति प्रथमं 'श्रेण्यादयः कृतादिभिः' इति च्व्यर्थे तत्पुरुषः समासः ॥ तदनन्तरं चरणभूतं पङ्कजं चरणपङ्कजमित्युत्तरपदलोपी तत्पुरुषः॥ एवमत्र परिणामाभिव्यक्तिः॥'विषयी विषयात्मना यदा परिणामो भवति क्रियाकर'इति लक्षणानुगमात् ॥ नन्वत्र चरणमेव पङ्कजमिति मयूरव्यंसकादिसमासः स्यादिति चेन्न ॥ तत्सत्त्वे तस्य रूपकविषयतयोत्तरपदार्थप्राधान्येन दुरितदूरीकरणासंभवात् ॥ नन्वत्र चरणं पङ्कजमिवेत्युपमितसमासाश्रयणेन पूर्वपदार्थप्राधान्यात् दुरितदूरीकरणं संभवत्यतश्चरणं पङ्कजमिवेत्युपमा स्यादिति चेन्न॥ सोऽत्रोपमाविषयः समास एव न संघटते ॥ कुतः ॥ 'अमरीकबरीभारभ्रमरीमुखरीकृतम्' इति सामान्यधर्मप्रयोगात्॥'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति सूत्रेण सामान्याप्रयोगे एवोपमितसमासानुशासनमस्ति ॥ अतोऽत्र रूपकाद्यसंकीर्णपरिणामोऽवगम्यः ॥ इति समाधानम् ॥

प्र०—'शरीरमात्रं विकृतिं प्रपेदे तथैव तस्थुः फणरत्नशोभाः' इत्यत्र शरीरमेव शरीरमात्रमित्यत्र मात्रच्प्रत्ययेन शरीरादन्यत्किमपि न विकृतम् ॥ 'मात्रं कार्त्स्न्येऽवधारणे' इत्यभिधानात् ॥ फणरत्नानां विकृतत्वापत्तेः फणरत्नानि तथैव तस्थुरेवेति वक्तव्यम् ॥ यदा रत्नानि तथैव स्थितानि तदा शोभा अपि स्थिता एव ॥ तस्माच्छोभापदं न घटत इत्यर्थ इति प्रश्नः ॥

उ०—'सविशेषणे हि विधिनिषेधौ'इति वामनसूत्रमस्ति ॥ तस्या-

यमर्थः ॥ विधिनिषेधौ सविशेषणे भवतः ॥ अतस्तौ विशेष्ये बाधापन्ने सति विशेषणमुपसंक्रामतः ॥ तदा यद्विशेष्यं भवति तद्विशेषणं स्याद्यद्विशेषणं तद्विशेष्यं स्यात् ॥ विशेषणे बाधापन्ने सति तौ विशेष्यमुपसंक्रामतः तर्हि यद्विशेषणं स्यात्तद्विशेष्यमापद्यते यद्विशेष्यं तद्विशेषणं भवतीति ॥ एवं चात्र फणरत्नपदं विशेषणं भवति शोभापदं विशेष्यं भवति तच्छोभापदं बाधापन्नं सद्विशेषणं जातम् ॥ विशेषणं फणरत्नपदं विशेष्यं जातम् ॥ तदातिशयशोभाविशिष्टरत्नानीत्यर्थो निष्पन्न इति वामनपरिभाषया समाधेयम् ॥

प्र०—'सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्तमानः ॥ पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः' इत्यपि कालिदासः । तत्राग्रसरोरुहाणीति पदेन पद्मबोधे सति पद्मानीति पदं किमर्थमुक्तमिति प्रश्नः ॥

उ०—अग्रसरोरुहाणीत्यत्र केवलयोगशक्तिरेवमन्तव्या ॥ तयाच तोयोत्पन्नतृणतरुवानीरवनकलमाद्यर्थबोधोऽपि सरोरुहशब्देन स्यादिति पद्मानीति विशेष्योपादानं कृतमिति न पुनरुक्तदोषापत्तिरिति समाधानम् ॥

प्र०—'उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजसंभवः परागः' इति भारविः ॥ तत्र स्थलनलिनीवनादुद्धूतस्य परागस्य सरसिजसंभवत्वं कथं संघटते इति प्रश्नः ॥

उ०—तत्र सरसिजशब्दे प्राधान्येन रूढिशक्तिरेव मन्तव्येति सरसिजशब्दः सामान्यकमलवाचको जातोऽतः स्थलनलिनीसरसिजशब्दयोरैकार्थ्यान्न विरोधः इति समाधानम् ॥

प्र०—'स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती' इति कालिदा-

सः ॥ तत्र परस्मैपदिनः स्थाधातोरुपतस्थे इत्यात्मनेपदं कथं निष्पन्नमिति प्रश्नः ॥

उ०—'उपाद्देवपूजासंगतिकरणमित्रीकरणपथिषु' इति वाच्यमिति वार्तिकेनात्रात्मनेपदं बोध्यम् ॥

प्र०—ननु तद्वार्तिकेन तु देवपूजाविषयमात्मनेपदं विहितं नतु मानुष्यपूजाविषयमिति चेच्छृणु ॥

उ०—अत्र नृपेऽपि देवत्वारोपाद्देवत्वमस्ति ॥ अपिच । 'अष्टानां लोकपालानां मात्राभिर्निर्मितो नृपः' इति वाक्येन राज्ञो देवतांशत्वाद्देवत्वमस्ति ॥ एवं चोपतस्थे इत्यात्मनेपदप्रयोगः समंजस इति समाधानम् ॥

प्र०—'त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा' इत्यपि कालिदासः । तत्रैवं शङ्क्यते ॥ त्रिलोकनाथेनेत्यत्र त्रिलोकशब्दस्य पञ्चब्राह्मणाइतिवत्संज्ञावाचकत्वाभावात्संख्यावाचित्रिशब्दस्य लोकशब्देन सह कथं समासः 'दिक्संख्ये संज्ञायाम्' इति सूत्रस्य दिक्संख्यावाचकानां यदि समानाधिकरणसमासः स्यात्तर्हि संज्ञायामेवेति नियमविधायकत्वात् ॥ अपिच ॥ नियम्या इत्यत्र सोपसर्गाद्यमधातोः कथं यप्रत्ययः ॥ 'गदमदचरयमश्चानुपसर्गे' इति सूत्रेणानुपसर्गाद्यमेर्यत्प्रत्ययविधानादितिप्रश्नद्वयम् ॥

उ०—त्रयोऽवयवा यस्य स त्र्यवयवः स चासौ लोकश्चेत्युत्तरपदलोपी समासः कर्तव्यः ॥ यद्वा त्रयाणां लोकानां नाथः त्रिलोकनाथ इति ॥ 'तद्धितार्थोत्तरपदसमाहारे' इति सूत्रेणोत्तरपदसमासः कार्यः ॥ यद्वा त्रींल्लोकान्स्वीयत्वेन लोकयतीति त्रिलोकः ॥ 'कर्मण्यण्' इत्यण्प्रत्ययः स चासौ नाथश्चेति समासः ॥ नियम्या इत्यत्र पदसंस्कारपक्षे केवलाद्यमेर्यत्प्रत्ययः पश्चान्निशब्देन सह

समासः ॥ यद्वा निपूर्वाद्यमेः स्यादेव यत्प्रत्ययः ॥ तत्र भवेद्विनियम्यमिति वार्तिकप्रयोगाज्ज्ञापकादिति साधुत्वम् ॥ यद्वा नियमे साधवो नियम्याः ॥ 'तत्र साधुः' इति यत्प्रत्ययः ॥ यद्वा नियममर्हन्तीति नियम्याः ॥ 'तदर्हति'इति यत् ॥ यद्वा उपसर्गप्रतिरूपको निपातः ॥ इति प्रश्नद्वयोत्तरं समाधेयम् ॥

प्र०—'लक्षीकृतस्य हरिणस्य हरिप्रभावः प्रेक्ष्य स्थितां सहचरीं व्यवधाय कायम्'इत्यपि कालिदासः ॥ तत्र सहचरीमित्यत्रानधिकरणोपपदत्वेन 'चरेष्टः'इति सूत्रेण टप्रत्ययाभावात्सहचरीमिति ङीबन्तं रूपं कथं निष्पन्नमिति प्रश्नः ॥

उ०—पचादिषु चरडिति पाठाच्चरट्शब्दस्य टित्वेन 'टिड्ढाणञ्'इत्यादिना ङीपि सहचरीमिति रूपं निष्पन्नमितिसमाधानम्॥

प्र०—'आविर्बभूव कुशगर्भमुखं मृगाणां यूथं तदग्रसरगर्वितकृष्णसारम्' इत्यत्राप्यग्रसर इति कथं सिद्धम् ॥ अग्रमग्रेणाग्रे वा सरतीत्यग्रेसर इति स्यान्नत्वग्रसर इति 'पुरोग्रतोग्रेषु सर्तेः' इति सूत्रे अग्रे इति एदन्तत्वनिपातनादिति प्रश्नः ॥

उ०—बाहुलकादग्रसर इत्यपि स्यात् ॥ कौमुद्यां बाहुलकादिति हरदत्त इत्युक्तत्वादिति समाधानम् ॥

प्र०—'मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध'इत्यत्रापि नञ्पूर्वाज्जीर्यतेः कर्तरि यत्संगतं चेद्विशेष्यमत्यर्थकेन 'अजर्यं संगतम्' इति सूत्रेण यत्र संगतमिति विशेष्यं वर्तते तत्रैव यत्प्रत्ययविधानादत्र संगतमिति विशेष्याभावे कथमजर्यमिति प्रयुक्तम् ॥ भावार्थकण्यत्प्रत्यये त्वजार्यमिति स्यान्न त्वजर्यमिति ॥

उ०—'तेन संगतमार्येण रामाजर्यं कुरु द्रुतम्' इति भट्टिकाव्ये संगतमिति विशेष्योपादानं यथा कृतं तथैवात्र विशेष्यं नोपात्तम्।

तथापि संगतमिति विशेष्यमध्याहारेणात्र बोध्यम् ॥ तथैव कौमुद्यां संगतमिति विशेष्यमध्याहार्यमित्युक्तत्वादिति समाधेयम् ॥

प्र०–'तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित्' इत्यत्रापि षष्ठशब्दस्य कथं समासः ॥ 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' इति सूत्रेण पूरणाद्यर्थप्रत्ययान्तशब्दैः सदादिभिश्च षष्ठीसमासप्रतिषेधादिति पूर्वपक्षः ॥

उ०–'षष्ठाष्टमाभ्यां ञ च' इति सूत्रेणात्र पूरणार्थप्रत्ययान्तषष्ठशब्दात् भागार्थप्रत्ययः कर्तव्यः ॥ ततो भागार्थप्रत्ययान्तषष्ठशब्देन सहोञ्छशब्दः समस्तव्योऽतोनात्र दोषापत्तिरिति समाधानम्

प्र०–'शार्वरस्य तमसो निषिद्धये' इति कालिदासप्रयोगः ॥ 'अनुदितौषसराग' इति भारविप्रयोगः ॥ समानकालीनं प्राक्कालीनमित्यादिप्रयोगेषु शर्वरीउषःसमानकालप्राक्कालादिशब्दाः कालवाचकाः सन्त्यतस्तेभ्यस्तु 'कालाट्ठञ्'इत्यनेन ठञ्प्रत्ययः स्यादतः शार्वरिकस्येत्यादिप्रयोगाः स्युर्नतु शार्वरस्येत्याद्याः । अतः कथं ते निष्पन्ना इति प्रश्नः ॥

उ०–कवीनां निरङ्कुशत्वादेते प्रयोगाः संकलिता एवमवसेयम्॥ यद्वा अपभ्रंशा एव एते इति प्रामाणिका इति समाधानम् ॥

प्र०–'तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ॥ विस्माययन् विस्मितमात्मवृत्तौ सिंहोरुसत्वं निजगाद सिंहः' इति कालिदासकृतिः ॥ तत्र विपूर्वक 'स्मिङ् ईषद्धसने' इति धातोर्णिजन्तात्लादेशशत्रन्तं रूपं केचिद्विस्माययन्निति पठन्ति केचित्तु विस्मापयन्नित्यपि पठन्ति ॥ तत्र विस्माययन्निति साधीयान् पाठः उतच विस्मापयन्निति साधीयान्पाठ इति प्रश्नः ॥

उ०–विपूर्व'स्मिङ् ईषद्धसने' इति धातोर्णिचि वृद्धावायादेशे

लटः शत्रादेशे च कृते सति विस्माययन्निति पाठः साधुतरोऽस्ति ॥ स्मयतेरेचो नित्यमात्वं स्याण्णौ हेतोः स्मये इत्यर्थकेन 'नित्यं स्मयतेः' इति सूत्रेणात्वे कृते पुगागमेन विस्मापयन्नित्यपि पाठः सिद्धोऽस्ति ॥ ननु 'नित्यं स्मयतेः' इत्यनेन यत्र हेतोः स्मयोऽस्ति तत्रात्वं विधीयते ॥ अत्र तु मनुष्यवाचेति करणात्स्मयोऽस्त्यतोऽत्र कथं तेनात्वं स्यात् ॥ इहापि हेतोः स्मयो भवतीति चेत्तर्हि आभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयावित्यर्थकेन 'भीस्म्योर्हेतुभये' इति सूत्रेणात्मनेपदे सति विस्मापयमान इति स्यान्नतु विस्माययन्निति चेच्छृणु ॥ राजा विस्मयते तं मनुष्यवाक् विस्माययते तया सिंहो विस्मापयन्नित्यर्थः ॥ एवं च प्रथमणिचि हेतुर्मनुष्यवाक् इति आत्वयुकावुपपन्नौ ततो द्वितीयणिजन्तात् लटः शत्रादेशे कृते सति विस्मापयन्नित्यपि रूपं सिद्धम् ॥ तदुक्तं कौमुद्याम् ॥ मनुष्यवाक् प्रयोज्यकर्त्रीं विस्मापयते[1] तया सिंहो विस्मापयन्निति ण्यन्ताण्णौ शतेति व्याख्येयमिति ॥ तत्रात्मनेपदं तु न स्यात् ॥ कुतः ॥ यत्र हेतोः स्मयोऽस्ति तत्रात्मनेपदं विहितम् ॥ द्वितीयणिजर्थं प्रति वाचो हेतुत्वं नास्ति तत्र तु वाचः करणत्वमस्त्यतोऽत्र विस्मापयमानः स्यादिति दोषापत्तिरनुपपन्ना इति समाधानम् ॥

प्र०—'गङ्गां भगीरथेनेव पूर्वेषां पावनक्षमाम्' इत्यत्र 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इति गणसूत्रेण यत्र संज्ञाभिन्नव्यवस्था भवति तत्र सर्वनामसंज्ञा विधीयते ॥ अत्रतु 'पूर्वो ज्येष्ठे पूर्वजे स्यात्' इति कोशात्पूर्वशब्दस्य संज्ञात्वमस्त्यतः पूर्वेषामित्यत्र कथं सर्वनामसंज्ञाकार्यं जातमिति प्रश्नः ॥



१ मनुष्यवाक् तं राजानं ।

उ०—'तात्स्थ्यात्ताच्छब्द्यम्' इति वामनपरिभाषया पूर्वकालस्थितत्वात्पूर्व इत्यभिधीयते इतिसमाधानम्। एतेन 'श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः' इत्यपि दत्तोत्तरं जातम्

प्र०—'सकीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्' इत्यत्र पूर्णरन्ध्रैः कूजद्भिरिति पदद्वयं न संघटते ॥ कुतः ॥ 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यभिधानादिति प्रश्नः ॥

उ०—अत्र कीचकशब्दे मारुतपूर्णरन्ध्रत्वं शब्दकरणत्वं चास्ति तज्जहदजहल्लक्षणया त्यक्त्वा कीचकशब्देन केवलं वंशवाचकत्वमेव स्वीकर्तव्यमिति समाधानम् ॥

प्र०—'तुलयति तुलने' त्यत्र 'तुल उन्माने' इत्यस्माद्धातोर्णिचि कृते तोलयतीति रूपं स्यान्न तु तुलयतीति ॥ अतः कथं तुलयति तुलनेति प्रयोगनिष्पत्तिरिति शङ्का ॥

उ०—'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' इति सूत्रे अङ्प्रत्ययान्ततुलाशब्दस्य निपातनादङ्प्रत्ययान्तस्तुलाशब्दः सिद्धः ॥ तस्मात्तुलाशब्दात् ॥ 'तत्करोति तदाचष्टे' इत्यनेन णिचि कृते तुलयतीति रूपं निष्पन्नमिति समाधानम् ॥

प्र०—'कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम्' इति भारविः ॥ तत्र यमाविति पदस्य मल्लिनाथेन टीकायां माद्रीपुत्राविति पर्यायपूर्वकोर्थः कृतः ॥ तद्राजस्याकारस्य स्त्रियां लुक् स्यादित्यर्थकेन 'अतश्च' इति सूत्रेण तत्राणप्रत्ययाकारस्य लुकि कृते मद्रीपुत्राविति प्रयोगः स्यात् नतु माद्रीपुत्राविति प्रश्नः ॥

उ०—माद्रीशब्दस्य भर्गादित्वं कल्पयित्वा तत्र 'न प्राच्यभर्गादियौधेयादिभ्यः' इति सूत्रेणाकारस्य लुक् निषिध्यते ॥ अतो भार्गीवन्माद्रीवत्सिद्धोऽयं प्रयोगः ॥ अथवा हरदत्त-

मते तु मद्रीसुताविति ह्रस्व एव पाठ इति समाधानम् ॥

प्र०–'स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संश्रृणुते स किंप्रभुः' इत्यत्र संश्रृणुते इति शृणोतेरकर्मकत्वं कथम् ॥ तस्य सकर्मकत्वादिति शङ्क्यते इति चेच्छ्रूयताम् ॥

उ०–अत्र हितरूपकर्मणोऽविवक्षितत्वात्संश्रृणुत इत्यकर्मिका क्रिया समधिगम्या ॥ तदुक्तम् 'धातोरर्थान्तरे[1] वृत्तेर्धात्वर्थेनोपसं[2]ग्रहात् ॥ प्रसिद्धे[3]रविवक्षा[4]तः कर्मणोऽकर्मिका क्रिया' इति ॥

प्र०–'मार्गणैरथ तव प्रयोजनं नाथसे किमु पतिं न भूभृताम्' इत्यत्र याच्ञार्थे नाथसे इति कथमात्मनेपदम् ॥ आशिष्येव नाथतेरात्मनेपदाभिज्ञानात् ॥ तदुक्तं कौमुद्याम् ॥ 'आशिषि नाथः' इति वाच्यम् ॥ आशिष्येवात्मनेपदं स्यात् नाथते अन्यत्र नाथतीत्येवंप्रश्नः ॥

उ०–नाधसे इति पाठान्तरकल्पनया ह्यवसेयम् ॥ नाथृ नाधृ याच्ञोपतापैश्वर्याशीःष्वित्यत्र नाधतेर्याच्ञाद्यर्थोपदेशात् ॥

प्र०–'अभिरश्मिमालिविमलस्य धृतजयधृतेरनाशुषः ॥ तस्य भुवि बहुतिथास्तिथयः प्रतिजग्मुरेकचरणं निषीदतः' इति च भारविः ॥ तत्र बहुतिथास्तिथय इत्यत्र बहुशब्दात् 'तस्य पूरणे डट्' इति डट्प्रत्ययेन 'बहुपूगगणसङ्घस्य तिथुक्' इति तिथुगागमेन बहुवचनान्तो बहुतिथाः शब्दो निष्पन्नः स तु तिथिशब्दस्य विशेषणीभूतः पुंल्लिङ्गो ज्ञेयः । अन्यथा बहुतिथा इत्यत्र टित्वात् ङीपि तु बहुतिथ्य इति स्यात् ॥ अत्र शंक्यते ॥ तिथिनाडिरुचि-

---

१ नदी वहति तस्यायमर्थः नदी गच्छतीत्यर्थः । २ नृत्यति तस्य कोऽर्थः गात्रविक्षेपं करोतीति । ३ मेघो वर्षति तस्य कोवार्थः मेघो जलं वर्षतीति । ४ हितान्न यः संश्रृणुते स किंप्रभुः इत्यत्र कर्मणोऽविवक्षा ।

वीचिनालिधूलिकिकिकेलिछविनीविरात्रयः' इति लिङ्गानुशासने तिथिशब्दस्य स्त्रीलिङ्गतोक्ता तथापि कथं सोऽत्र पुंलिगो निर्दिष्टः॥ नैषधेपि'निखिलान्निशिपूर्णिमातिथीन्'इति कथं निर्दिष्ट इति प्रश्नः

उ०—तत्र लिङ्गानुशासने एवोक्तम् ॥ तथाहि ॥ शलाकास्त्रियां नित्यम् ॥ नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयतीति ॥ एवं लिङ्गानुशासनोक्तानां स्त्रीलिङ्गशब्दानां क्वचिद्व्यभिचारज्ञापनात्तिथिशब्दस्य पुंलिङ्गत्वेऽपि न दोषावकाशः ॥ अपि चामरकोशेपि तिथयो द्वयोरित्युक्तत्वाच्चेति समाधानम् ॥

प्र०—'तपनमण्डलदीपितमेकतः सततनैशतमोवृतमन्यतः ॥ हसितभिन्नतमिस्रचयं पुरः शिवमिवानुगतं गजचर्मणा' इत्यत्र सततनैशतमोवृतपदे 'ओजःसहोम्भस्तमसस्तृतीयायाः' इति सूत्रेण तृतीयाया अलुक् स्यात्तदा नैशतमसावृतमिति स्यान्न तु नैशतमोवृतमिति ॥ एवं प्रश्नः ॥

उ०—अत्र 'वृतु वर्तने' इत्यस्मात् भावे क्तप्रत्ययेन समाधानं चिन्त्यम् ॥ तत्र छन्दोभङ्गप्रसङ्गात् ॥ अत्र समाधानं तु ॥ व्रियते स्म इति वृतं अत्र वृञ् संवरणे इत्यस्य सकर्मकत्वेऽपि कर्मणोऽविवक्षया भावे क्तः। धातूनामनेकार्थत्वेन व्याप्त्यर्थाङ्गीकारश्च वृतं वृतिः नैशतमसो वृतं नैशतमोवृतमिति षष्ठीसमासः। अत्र शेषत्वविवक्षायां 'शेषे षष्ठीति' षष्ठी ज्ञेया। सततं नैशतमोवृतं यस्मिन्निति सततनैशतमोवृतस्तमिति ॥ यद्वा 'वृतु वर्तने' इत्यस्माद्धातोः घञर्थे कविधानमिति भावे कप्रत्यये सति तदन्तेन वृतशब्देन षष्ठीसमासाश्रयणानन्तरं सततनैशतमोवृतं यस्मिन्निति बहुव्रीहौ सततनैशतमोवृत इति सिद्धम् ॥

प्र०—ननु'ओजःसहोम्भस्तमसस्तृतीयायाः'इत्यस्मिन्सूत्रे केवल-

तमःशब्दोपादानेन समस्तान्नैशतमश्शब्दात् तृतीयाया अलुकोऽप्राप्तौ सत्यां किमर्थं कर्त्रर्थककप्रत्ययं त्यक्त्वा तं भावे कृत्वा षष्ठीसमासो विधीयते इति चेच्छृणु ॥

उ०—'पदाङ्गाधिकारे तस्य तदन्तस्य च' इति सूत्रेण तदन्तविधौ तमःशब्दान्तनैशतमश्शब्दादपि 'ओजःसह' इत्यनेन तृतीयाया अलुक् स्यादिति चेन्न ॥ कथं ॥ केवलपदाधिकारे एव तदन्तविधिः॥अत्र तु'अलुगुत्तरपदे' इति सूत्रादुत्तरपदाधिकारान्न तु उत्तरपदाधिकारे तदन्तविधिः ॥ तथाच नैशतमसेति तृतीयाया अलुङ् न भवतीति दुर्घटवृत्त्यादावुक्तमिति चेत्सत्यं ॥ उत्तरपदाधिकारे प्रत्ययग्रहणेन तदन्तग्रहणमिति निषेधस्तु यत्र प्रत्ययग्रहणेन प्रत्ययान्तरूपतदन्तविधिः क्रियते तद्विषयः न तु पदाङ्गाधिकारविषयः ॥ अतएव पदाङ्गाधिकार इत्यत्र इष्टकचितं पक्वेष्टकचितमिति भाष्योदाहरणादुत्तरपदाधिकारेऽपि तदन्तविधिः ॥ तत्रेत्थं भाष्यकाराशयः ॥ पदाङ्गाधिकार इत्यनेनोत्तरपदाधिकारस्थेऽपि 'इष्टकेषीकामालानां चिततूलभारिषु' इति पूर्वपदह्रस्वविधायके सूत्रे तदन्तविधिं कृत्वा पक्वेष्टकाभिः चितं पक्वेष्टकचितमिति प्रयोगे चितशब्दे परतः पक्वेष्टकाशब्दे ह्रस्वविधानं कृतं ॥ अतो वृतशब्दे भावार्थकविधानेन पूर्वोक्ता नैशतमोवृतप्रयोगनिष्पत्तिः समञ्जसेति दिक् ॥

प्र०—'वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम्' इत्यत्र वीते निवृत्ते जन्मजरसौ[1] यस्य तद्वीतजन्मजरं[2] तस्य वीत-

---

1 वीते निवृत्ते जन्मजरसी इत्यपि केचिन्मतेऽस्ति तत्तु निर्मूलं कौमुद्यां निषिद्धत्वात् । 2 वीतजन्मजरसमित्यपि तत्रैवं निषिद्धं सोरमादेशे कृते सन्निपातपरिभाषया जरसं इत्युक्तत्वात् ।

जन्मजरसः ॥ तत्र वृत्तिकृन्मतानुसारतः पूर्वविप्रतिषेधेन 'टाङसिङसामिनात्स्याः' इति सूत्रेण पूर्वं स्यादेशे कृते सति वीतजन्मजरस्येति जरसादेशरहितं रूपं स्याद्यथा अमुं अमून् इत्यत्र विभक्तिकार्यं पूर्वं जातं तथात्रापि स्यादेशः पूर्वं स्यात्तत्कुतो नेति प्रश्नः ॥

उ०–'विप्रतिषेधे परं कार्यम्' इति परिभाषया पूर्वं जरसादेशं कुर्वता भाष्यकृता स्यादेशो बाधितोऽतो भाष्यकारमतविरुद्धत्वाद्वीतजन्मजरस्येति प्रयोगो न जायते ॥ 'टाङसिङसामिनात्स्याः' इति स्यादेशबाधनात् ॥ परत्वाज्जरसादेशं बभाषे भाष्यकृत्स्वय' मित्यादिकारिकाकर्त्रापि भाष्यकारमतानुसारेण पूर्वं जरसादेशः कृतः ॥ अतो वीतजन्मजरसोऽयमेव प्रयोगः साधुरिति समाधानम्

प्र०–ननु त्वतलोः परयोः पूर्वस्य पुंवद्भावविधायके 'त्वतलोर्गुणवचनस्य' इति सूत्रे गुणस्येति वक्तव्ये वचनग्रहणं प्रसिद्धगुणपरिग्रहार्थम् । अतस्तथैवोदाहरति शुक्लत्वं शुक्लतेति ॥ तर्हि 'निरीक्ष्य मेने शरदः कृतार्थता' ॥ 'सा मुमोच रतिदुःखशीलताम्' इत्यादिषु कथं पुंवद्भाव इति प्रश्नः ॥

उ०–नहि तत्र 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावः। किंतु कृतार्थः दुःखशीलयोरित्यत्र 'सामान्ये नपुंसकम्' इति नपुंसकत्वं विधाय समासः कार्यः एवंच 'नेष्टं पुरोद्वारवतीत्वमासीत्' इत्यादौ त्वप्रत्ययपरत्वेपि स्त्रीलिङ्गप्रयोगो नपुंसकत्वविरहेण निर्बाध इति भावः॥

प्र०–'तमनिन्द्यवन्दिन इवेन्द्रसुतं विहितालिनिक्वणजयध्वनयः। पवनेरिताकुलविजिह्मशिखाजगतीरुहोऽवचकरुः कुसुमैः' इत्यत्र अवचकरुः कुसुमैरिति कॄ विक्षेपे इत्यस्य धातोः सकर्मकत्वात्कुसुमानां सकर्मकत्वे सति कथं करणत्वमिति प्रश्नः ॥

---

१ [illegible] पूर्वं कार्यं स्यादिति पूर्वविप्रतिषेधमतेन [illegible] तुल्यबलविरोधे ।

उ०—धातूनामनेकार्थत्वेनात्र किरतेर्वृष्ट्यर्थत्वात्कुसुमानां करणत्वं विक्षेपार्थत्वे तु कर्मत्वमेव ॥ यथा वामा कटाक्षान् किरतीतिवत् ॥ दृश्यते च धातूनामर्थभेदात्कारकव्यत्ययः ॥ यथा षिचि सेचने इतिधातोःक्षरणार्द्रीकरणयोरर्थयोर्द्रव्यस्य कर्मत्वकरणत्वे ॥ तथाहि ॥ अमृतं सिंचति गौः पयश्च सिञ्चति वाऽमृतैर्वपुरिति ॥

प्र०—'निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निस्पृहाणाम्' इति श्लोके अस्मास्वित्यत्रापादानमपेक्षितं नत्वधिकरणत्वं ॥ मल्लिनाथेनापि न किंचिदस्मत्तो लभ्यमित्यर्थ इतीत्यर्थे अपादानत्वं प्रदर्शितमतः कथं तत्राधिकरणत्वमिति प्रश्नः ॥

उ०—कारकाणां विवक्षाधीनत्वादधिकरणत्वविवक्षायां सप्तमीति बोध्यम् ॥

प्र०—नन्वत्र निरास्पदं प्रश्नकुतूहलित्वं निरास्पदं यत् प्रश्नकुतूहलं तदस्ति अस्येति प्रश्नकुतूहली तस्य भावः प्रश्नकुतूहलित्वमित्यत्र कुतूहलित्वपदमधिकं प्रतिभाति । कुतः मल्लिनाथेन आगमनप्रयोजनप्रश्नो निरास्पद इत्यर्थः ॥ एवं व्याख्यातं परं तु कुतूहलित्वपर्यायो नोक्तः ॥ तस्मात्कुतूहलित्वपदमधिकं प्रतीयते इति प्रश्नः ॥

उ०—'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः सति विशेषणे बाधे विशेष्यमुपसंक्रामतः' इति वामनपरिभाषया प्रश्नस्य कुतूहलित्वं, प्रश्नकुतूहलित्वं इत्यत्र 'भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषण'मिति भेद्यभेदकयोः श्लिष्टः संबन्धोऽन्योन्यमिष्यते ॥ श्लिष्टो यद्यपि संबंधः षष्ठ्युत्पत्तिस्तु भेदकात् ॥ यथा राजपुरुष इत्यत्र राजपदं विशेषणमस्ति पुरुष इति पदं विशेष्यं भवति तथैवात्रापि प्रश्न इति पदं विशेषणं भवति ॥ इष्टा तु प्रश्नपदे विशेष्यता ॥ पृच्छनीयस्य प्रश्नस्य म-

धानत्वेन विशेष्यत्वात् ॥ अतो विशेष्ये यदा बाधः समायातस्तदा विशेष्ये विशेषणमुपसंक्रामते ॥ तदा यद्विशेषणं तद्विशेष्यं भवति यद्विशेष्यं तद्विशेषणं भवति तदार्थः कियान् संपन्नः ॥ एवं कुतूहलपदं प्रश्नस्य विशेषणं जातं ॥ तदा कुतूहलविशिष्टः प्रश्न इत्यर्थो निष्पन्नो जातः ॥ एवं वामनपरिभाषया समाधानम् ॥

प्र०—'उपारताः पश्चिमरात्रिगोचरादपारयन्तः पतितुं जवेन गाम् ॥ तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं गवां गणाः प्रस्तुतपीवरोधसः' इत्यपि भारविः ॥ तत्र पश्चिमरात्रिगोचरादित्यस्मिन्प्रयोगे पश्चिमा चासौ रात्रिश्चेति विशेष्यविशेषणसमासेनेकारान्तो रात्रिशब्दप्रयोगः साधुः ॥ उतच पश्चिमं रात्रेरिति पश्चिमरात्र इत्येकदेशिसमासेनाकारान्तः प्रयोगः साधुरिति प्रश्नः ॥

उ०—'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे'[१]इति सूत्रेण पश्चिमं रात्रेरिति सामान्यापेक्षज्ञापकसिद्धैकदेशिसमासे कृते सति 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इति सूत्रेण पश्चिमरूपैकदेशपूर्वकरात्रिशब्दादच्प्रत्यये कृते सतिपश्चिमरात्रशब्दोऽकारान्तोनिष्पन्नः। नन्वत्र कथं ज्ञापकसिद्धत्वमिति चेदुच्यते यद्यप्येकदेशिसमासविधायके पूर्वापराधरोत्तरमिति सूत्रे संख्याविसायशब्दा नोक्तास्तथापि पाणिनिना 'संख्याविसायपूर्वस्याह्नस्याऽहनन्यतरस्यां ङौ' इति सूत्रे संख्याविसायपूर्वमेकदेशिसमासविषयकमह्नादेशमङ्गीकृत्य संख्यादिपूर्वस्याह्नस्य अहनादेशः कृतः तत्सामर्थ्यात्सर्वेऽप्येकदेशवाचकाः शब्दाः कालवाचिना समस्यन्ते तेन पश्चिमरात्रशब्दोऽप्येकदेशीसमासेनाकारान्तः सिद्धः संख्याविसायेति ज्ञापकस्य सामान्यापेक्षत्वात् तथैवोक्तं कौमुद्याम् ॥ केचित्तु सर्वे

१ अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी ।

एकदेशः कालेन समस्यते नत्वह्नैव ज्ञापकस्य सामान्यापेक्षत्वात् तेन मध्यमरात्रः 'उपाहृताः पश्चिमरात्रगोचरात्' इत्यादिसिद्ध-मित्याहुरिति । अपिच 'ज्ञापकसिद्धं न सर्वत्र' इति परिभाषया ज्ञापकसिद्धस्य सार्वत्रिकत्वाभावात् पश्चिमा चासौ रात्रिश्चेति विशेषणसमासेन पश्चिमरात्रिशब्द इकारान्तोऽपि समंजसः।तस्मा-त्पश्चिमरात्रगोचरात्पश्चिमरात्रिगोचरादिति पाठद्वयमपि सिद्धम् ॥ ननु ज्ञापकानुसरणक्लेशस्य किं प्रयोजनं मल्लिनाथेन पश्चिमा चा-सौ रात्रिश्चेति विशेषणसमास एव कृत एकदेशिसमासो निषिद्ध-स्तद्विधायके पूर्वपरादिसूत्रे पश्चिमशब्दाग्रहणादित्युक्तत्वाच्चेति कथं पाठद्वयसिद्धिरिति चेच्छृणु । एवं च ज्ञापकानुसरणक्लेशं त्य-क्त्वैकदेशिसमासे चाकृते सूत्रकारमतेन मध्याह्नः पश्चिमाह्नः सं-ख्याह्नः सायाह्न इत्यादिप्रयोगाः कथं सिद्धाः स्युः। एकदेशिसमासे तु 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययान्ताहन्शब्दस्य स्थाने 'अह्नोऽह्नः' इति सूत्रेणैकदेशिसमासविषयके अह्नादेशे कृते सति तेषां सिद्धिः । तथाच तत्त्वबोधिन्यां मध्याह्न इति 'राजाहःसखि-भ्यः' इति टच् 'अह्नोह्नः' इत्यह्नादेशः ॥ अयं चादेशो मध्याह्नश-ब्दयोरूर्ध्वकायवत्कर्मधारयेण न निर्वहति तस्यैकदेशिसमासप्रयु-क्तत्वादतो ज्ञापकाश्रयणं युक्तमेवेति बोध्यमित्युक्तत्वात् ॥ अतो ज्ञापकानुसरणाभावे सूत्रकारमतेन तत्प्रयोगसिद्धिरवमृग्या तस्मा-त्पूर्वोक्तसमासद्वयाश्रयेण पाठद्वयसिद्धिर्युक्तैवेति समाधानम् ॥

प्र०—'समुच्छ्वसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभि-भिः' इत्यपि भारविः ॥ तत्र 'नाभिरक्षत्रिये' इति लिङ्गानुशासना-त्स्त्रीलिङ्गस्थनाभिशब्दविशेषणीभूतैः समुच्छ्वसत्पङ्कजपत्रकोमलै-रिति कथं पुल्लिङ्गतेति प्रश्नः ॥

उ०—दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् ॥ वस्तुतस्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात्पुंस्त्वमपि साधु इति समाधानम् ॥

प्र०—ननु 'गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र 'आहध्वं मा रघूत्तमम्' इति भट्टिप्रयोगे च कथमात्मनेपदम् ॥ 'आङो यमहनः' इति सूत्रेणेति चेन्न ॥ तत्राकर्मकस्वाङ्गकर्मकाधिकारात् ॥ अत्र त्वकर्मकत्वं स्वाङ्गकर्मकत्वमपि नास्त्यतोऽत्र कथमात्मनेपदप्रसक्तिरिति प्रश्नः ॥

उ०—वक्षोभेत्तुमित्यादि तुमुन्नन्ताध्याहारेण ज्ञेयम् ॥ तत्र वक्ष इति कर्मणस्तुमुन्नन्तभेदनक्रियान्वयेनाजघ्ने इत्यादौ 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियाः' इति वृद्धवाक्येन कर्मणोऽविवक्षितत्वात् ॥ यद्वा विषमविलोचनस्य समीपमेत्यार्जुनो वक्षः आजघ्ने स्वकीयमेव वक्षो मल्ल इव संतोषातिशयादास्फोटनं चक्रे इत्यर्थात्स्वाङ्गकर्मकत्वमप्यस्ति॥ एवं च सति हन्तेरकर्मकतया स्वाङ्गकर्मकतया च आजघ्ने आहध्वमित्यत्रात्मनेपदं प्रयुक्तम् ॥ ननु स्वाङ्गकर्मकत्वे सति ॥ 'जनक इव शिशुत्वे सुप्रियस्यैकसूनोरविनयमपि सेहे पाण्डवस्य स्मरारिः' इत्यनन्तरं वक्ष्यमाणं शिवकर्तृकाऽविनयसहनं विरुध्येदिति चेन्न॥ किरातवेषधारिणा भगवता सह युद्धमारभ्य तपस्विनाऽर्जुनेन वक्षोहननात्पूर्वो यो योऽविनयः कृतः स सर्वोऽपि भगवता सोढः एतदाशयविषयं वक्ष्यमाणं भगवत्कर्तृकाऽविनयसहनवाक्यमवसेयमिति समाधानम् ॥

प्र०—ननु 'तत्त्वमसि' इति सामवेदमहावाक्ये 'तदैक्षत बहु स्याम्' इत्यनन्यसाधारणेक्षणबभहुवनसत्यसंकल्पाद्यनन्तविशेषणवि-

शिष्टप्रस्तुतब्रह्मपरामर्शी तच्छब्दः त्वंपदं च संसारित्वविशिष्टजीववाचि तयोस्तत्त्वंपदयोः सामानाधिकरण्यं कथमवसेयमिति प्रश्नः

उ०—अत्र मुख्यार्थबाधे सति तत्त्वंपदयोः स्वार्थपरित्यागेन केवलं निर्विशेषचैतन्यमात्रमुपलक्षणीयमिति निरूढजहल्लक्षणया केचित्समुत्तरन्ति तत्तु चिन्त्यमस्ति ॥ कुतः विशेषणानां स्वसंबन्धानादरेणं वस्तुस्वरूपोपलक्षणपरत्वे सत्येकेनैव पदेन वस्तूपलक्षितत्वेनोपलक्षणान्तरस्यानर्थकत्वात् ॥ अपिच लक्षणासमाश्रयणे अनन्यलभ्यो हि शब्दार्थ इति न्यायादतिरिक्तवृत्तिस्वीकारे गौरवात्सर्वेषु वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गमात्रस्य प्राप्यत्वाच्च ॥ अपिच समानाधिकरणप्रवृत्तयोस्तत्त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यागे सामानाधिकरण्यमपि नैव सिध्येत ॥ भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति तल्लक्षणात् । ननु तावच्छुद्धैकचैतन्यस्य विविधविचित्रनामरूपार्हता कथमुपपन्ना मायायोगेनेति चेत्तर्हि तत्त्वमस्यादिवाक्योपदेशेन साधनचतुष्टयेन च जीवस्य ब्रह्मभावे संपन्ने सति मायायोगेन पुनरपि तस्य नानाविधत्वं स्यादतो भवन्मते ब्रह्मण एव पुनः पुनः संसृतिपरम्पराप्राप्तेत्यादिनानाविधदोषस्पदात्वादहो भवतां वाक्यार्थपर्यालोचनकुशलता ॥ अथातो रामानुजाचार्यभाष्यानुसारेण तदुत्तरमुच्यते ॥ 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेय इति तत्तेजोसृजत हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वमि'त्यादिनास्य जगतः सदात्मकतासृष्टेः पूर्वकाले नामरूपविभागाग्रहणम् ॥ जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणः स्वकृति-

रिक्तनिमित्तान्तरानपेक्षत्वं सृष्टिकाले अहमेवान्तःस्थिरचररूपेणबहु स्यामित्यनन्यसाधारणः संकल्पविशेषः यथासंकल्पमनन्तविचित्रतत्त्वानां विलक्षणक्रमविशेषविशिष्टा सृष्टिः समस्तेष्वचेतनेषु स्वात्मकजीवानुप्रवेशेनानन्तनामरूपव्याकरणं ॥ स्वव्यतिरिक्तसमस्तस्य स्वमूलत्वं स्वायतनत्वं स्वप्रतिष्ठत्वं स्वप्रवर्त्यत्वं स्वेनैव जीवनमित्यादि अनन्तविशेषणानि ब्रह्मणः प्रतिपादितानि ॥ तत्संबन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषता सर्वज्ञता सर्वेश्वरत्वसत्यकामत्वसत्यसंकल्पत्वसर्वानन्दकरणनिरतिशयानन्दादीनि सकलेतरप्रमाणविषयाणि सहस्रशः प्रतिपादितानि। एवमनन्तविशेषणविशिष्टप्रकृतब्रह्मवाचितच्छब्दोस्ति त्वंपदं च पर्यवसानवृत्त्या संसारिदेहविशिष्टजीवशरीरकब्रह्मवाचकमस्तीति तत्त्वमिति द्वयोरपि पदयोः स्वार्थापरित्यागेन सामानाधिकरण्यमवेसयं ॥ यथा नीलोत्पलादिषु सर्वेषु वाक्येषु समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते ॥ यथा नीलमुत्पलमानयेत्युक्ते नीलिमाविशिष्टमेवोत्पलमुन्नीयते ॥ यथा विन्ध्याटव्यां मदमुदितो मदनाक्रान्तो मातङ्गगणस्तिष्ठतीति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते ॥ यथा देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाणो गच्छतीति पदचतुष्टयावगतविशेषणविशिष्ट एवार्थः समधिगम्यते एवं वेदान्तवाक्येष्वपि समानाधिकरणनिर्देशेषु तत्त्वमस्यादिषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यं। एवंचात्र विशेषणभूतयोस्तत्त्वमिति पदयोर्ब्रह्मरूपविशेष्यप्रतिपाद्यत्वात्सामानाधिकरण्यम् ॥ भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति तल्लक्षणात् ॥ अतो यत्रयत्र विशेषणरूप-

पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्ततया विशेष्यस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं तत्रतत्र सामानाधिकरण्यं कार्यं। नच विशेषणग्रहणेन स्वरूपस्य प्रतिपाद्यत्वे सर्वेषां विशेषणानां स्वरूपस्यैव विशेष्यत्वेन प्रतिपाद्यत्वात्।एतदुक्तं भवति'ऐतदात्म्यमिदं सर्वम्' इति चेतनमिश्रं प्रपञ्चमिदं सर्वमिति निर्दिश्य तस्यैष आत्मेति प्रतिपादितं। एवं चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं सचेतनं जगत्तस्य शरीरं भवति ॥ तथाच श्रुत्यन्तराणि ॥ 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' इति प्रारभ्य 'य आत्मनि तिष्ठन् आत्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येषत आत्मान्तर्याम्यमृतः' इत्यादि ॥ यः पृथिवीमन्तरे संचरन् यस्य पृथिवी शरीरं य अपोन्तरे संचरन् यस्यापः शरीरमित्यारभ्य ॥ 'योऽक्षरमन्तरे संचरन् यस्याक्षरं शरीरं यमक्षरं न वेद एष सर्वभूतान्तर आत्मा अपहतपाप्मा दिव्यो देव एको नारायण' इत्यादीनि सचेतनं जगत्तस्य शरीरत्वेन निर्दिश्य तस्य आत्मत्वेन परमात्मानमुपदिशन्ति ॥अतश्चेतनाचेतनवाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतंचेतनशरीरकंपरमात्मानमेवाभिदधति॥ यथा अचेतनदेवादिसंस्थानपिण्डवाचिनःशब्दास्तत्तच्छरीरकजीवात्मन एव वाचकाः॥ चत्वारः पञ्चदशरात्राः देवत्वं गच्छन्तीत्यादिषु देवा भवन्तीत्यर्थः ॥ शरीरस्य शरीरिणं प्रति प्रकारत्वात् ॥ प्रकारवाचिनां शब्दानां प्रकारिण्येव पर्यवसानाच्छरीराभिधायिनां शब्दानां शरीरिपर्यवसानं न्याय्यं ॥ प्रकारो हि नाम इदं इत्थमिति प्रतीयमाने वस्तुनीत्थमिति प्रतीयमानोंशः ॥ तस्य

तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात्तस्मिन्नेव पर्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दस्तस्मिन्नेव पर्यवस्यति ॥ अतएव गौरश्वो मनुष्य इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि पिण्डे पर्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यन्तीति ॥ अत एव सर्वशब्दानां परमात्मा एव वाच्य इति तेषां परमात्मवाचकशब्देन सामानाधिकरण्यं ॥ एवंच सति तत्त्वमसीति समानाधिकरणवाक्ये तत्पदं जगत्कारणभूतं सत्यसंकल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानमाचष्टे त्वमिति च तमेव सशरीरकं जीवशरीरमाचष्टे इति परमात्मवाचकत्वेन तत्त्वंपदयोः सामानाधिकरण्यं मुख्यवृत्तं ॥ एवंसत्यपि परमात्मानं प्रति जीवस्य शरीरतया हेयास्तद्गता धर्माः परमात्मानं न स्पृशन्ति ॥ यथा स्वशरीरगता बालत्वयुवत्ववृद्धत्वादयो धर्माः जीवं न स्पृशन्ति ॥ एवंच सति प्रकरणाविरोधः श्रुत्यर्थाविरोधो ब्रह्मणि निरवद्ये कल्याणैकतानेऽविद्यादिदोषगन्धाभावश्चसंपन्नः॥ तत्त्वमसीत्यस्य सर्वावयवव्याख्यानं तु मत्कृतविशिष्टाद्वैतपूर्णेन्दोरवगम्यमिति दिक् ॥

प्र०—नन्वेकस्यैव 'णमु प्रह्वीभावे' इति धातोः कुत्रचित्सकर्मकत्वं कुत्रचिदकर्मकत्वं कथं दृश्यते ॥ तदेव दर्शयति ॥ 'नत्वा वरदराजः श्रीगुरुन् भट्टोजिदीक्षितान्' इति मध्यकौमुद्याम् ॥ 'प्रणम्य परमात्मानम्' इति सारस्वते ॥ 'नमन्ति यत्पादनिकेतमात्मनः' इति भागवते ॥ 'नमामि सर्वेप्सितकल्पवृक्षं सितांशुकं नीरदरम्यवर्णम्' इति विवेकसारे ॥ सर्वलोकाधिपं कृष्णं नत्वाऽनन्तगुणं सुखम्' इत्यलंकारेन्दुशेखरे चेत्यादौ नमतेः

सकर्मकत्वं दृश्यते ॥ 'कुसुमभारनते' इति रघुवंशे ॥ 'अम्बां प्रणामोपनतां नताङ्गी नलेन भैमी पथि योगमाया' इति नैषधे ॥ 'प्रणतजनसौभाग्यजननी' इति सौन्दर्यलहरीस्तोत्रे ॥ 'नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम्' इति कुवलयानन्दे ॥ 'कृष्णाय नो नमति यच्छिर एकदापि' इति भागवते चेत्यादौ च णमुधातोरकर्मकत्वं दृश्यते एवमेकस्यैव नमतेः सकर्मकत्वाकर्मकत्वरूपं वैलक्षण्यं कथं भवतीति प्रश्नः ॥

उ०—नत्वा वरदराजः श्रीगुरूनित्यादौ नमतेः सकर्मकत्वं धातूनामनेकार्थत्वान्नमतेराराधनार्थत्वस्वीकारेणसकर्मकत्वमवसेयम् । कुसुमभारनतेत्यादावकर्मकत्वं तु विवेचनापूर्वकमवगम्यम् । कात्र विवेचनेति चेत्तत्रोच्यते ॥ नमनं हि प्रह्वीभावः ॥ सचाङ्गस्य नीचैर्भवनानुकूलो व्यापारविशेषः तज्जन्यं फलं च अह्वस्य नीचैर्भवनं तयोर्नीचैर्भवनानुकूलव्यापारं विशेषस्य अङ्गस्य नीचैर्भवनरूपफलस्यापि च कर्तृनिष्ठत्वेन नमतेरकर्मकत्वमेव भवति ॥ यदा व्यापारस्य कर्तृनिष्ठत्वं फलस्य कर्मनिष्ठत्वमिति द्वयोर्भिन्ननिष्ठत्वं तदा सकर्मकत्वं ॥ तदुक्तं वैयाकरणभूषणे 'फलव्यापारयोरेकनिष्ठतायामकर्मकः ॥ धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः' इति ॥ ननु 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ॥ प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति वृद्धवचनतो नमतेरपि कर्मणोऽविवक्षितत्वेनाकर्मकत्वं विवक्षितत्वेन सकर्मकत्वं सिद्धमिति चेच्छृणु॥ अत्राविवक्षितत्वं कर्मणो न संभवति ॥ अत्र प्राप्तिपूर्वकत्वाभावात् विवक्षायाः प्राप्तिपूर्वकत्वेन संभवात् ॥ यत्र प्रमाणान्तरलभ्यत्वं कर्मणः स्यात्तत्रैवाविवक्षा ॥ यथा 'हितान्न यः संश्रृणुते स किं प्रभुः,' इत्यत्र हितरूपस्य श्रृणोतिकर्मणो गम्यमानत्वेनाऽविव-

क्षा ॥ तथा कुसुमभारनतेत्यादौ तु न संभवति ॥ अतो नमतेराराधनार्थत्वे सत्याराधनरूपव्यापारस्य कर्तृनिष्ठत्वेन तज्जन्यप्रीणनरूपफलस्य कर्मनिष्ठत्वेन सकर्मकत्वं फलव्यापारयोरेकनिष्ठत्वेनाकर्मकत्वमिति समाधानं समंजसमिति दिक् ॥

प्र०—ननु'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्'इतिश्लोके एतमित्यत्रान्वादेशेन एनमिति कथं न । अपिच 'मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं भीरुरयं तमेव तदिमं राधे गृहं प्रापय । इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुंजद्रुमं राधामाधवयोर्जयंति यमुनाकूले रहःकेलयः' इति श्लोकेऽपि इममित्यत्रेदं शब्दस्यान्वादेशेन एनमिति कथं न ॥ किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेश इत्येतल्लक्षणविषयान्वादेशे 'द्वितीयाटौस्स्वेनः' इति सूत्रेणैनादेशविधानादिति प्रश्नः ॥

उ०—पूर्वश्लोके ईषदर्थादयो नह्यज्ञाता बोध्यन्ते किंत्वाकारे ज्ञाता एवानुवादमात्रेणोच्यन्ते । अतोऽत्रापूर्वबोधनाभावादेतमित्यत्रैनादेशाभावः। अन्वादेशलक्षणवाक्ये कार्यं विधातुमित्यस्याऽपूर्वं बोधयितुमित्यर्थात् द्वितीयश्लोके तु श्रीकृष्णे सख्यारोपितभीरुत्वं भाविकाभिव्यवहारसंगोपनायानुवाद्यत्वेनैव विवक्षितं विवक्षापूर्विकाशब्दार्थप्रवृत्तिरितिव्याडिवचनात्।अतोत्रारोपितभीरुत्वस्याप्यनुवाद्यत्वेनैव विवक्षितत्वादिममित्यत्र एनादेशाभावः। अस्य सखिवाक्यत्वेन नंदनिदेशत इति पदं नंदनीयनिदेशादित्यर्थकं बोध्यं सर्वनियंतरि कृष्णे स्वाभाविकभीरुत्वाभावादारोपितभीरुत्वं ज्ञेयमिति शब्दरत्नाकराशयः । यद्वा नन्दनिदेशत इत्यस्य नन्दाभिधगोपनिदेशादित्यर्थत्वेन नृनाट्यं विदधति बालकृष्णे भीरुत्वसं-

भवात्तदनूद्यते नत्वपूर्वं विधीयतेऽतोत्रापि पूर्वश्लोकवदपूर्वबोधनाभावादेनादेशोऽनुपपन्नः ॥ इति प्रश्नद्वयसमाधानम् ॥

प्र०—'प्रदक्षिणीकृत्य हुतं हुताशमनंतरं भर्तुररुंधतीं च। धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः' ॥ इति श्लोके प्रदक्षिणीकृत्येत्यस्य समासः कथमिति प्रश्नः। अपि च प्रदक्षिणीकृत्येत्यत्र भावे प्रत्ययेन कर्तृकर्मणोरनुक्तत्वात् हुतादिकर्मसु यथा द्वितीया जाता तथैव प्रदक्षिणीकृत्येति क्रियां प्रति कर्तुर्नृपस्याप्यनुक्तत्वात्तत्र तृतीया कथं नोत्पन्नेति प्रश्नः ॥

उ०—प्रगतः दक्षिणं प्रदक्षिणं हुताशः प्रगतः दक्षिणं प्रदक्षिणं भर्ता अनंतरं भर्तुरित्युक्तत्वात् भर्तेत्यपि ज्ञेयं। प्रगता दक्षिणं प्रदक्षिणं अरुंधती धेनुश्च। अप्रदक्षिणमित्यत्र'तिष्ठद्गुप्रभृतीनि च'इत्यव्ययीभावसमासेन अव्ययीभावश्चेति सूत्रेण नपुंसकत्वं ज्ञेयं। ततो न प्रदक्षिणं अप्रदक्षिणं प्रदक्षिणं संपद्यते तथाभूतं तथाभूतां च कृत्वेति क्त्वास्थाने ल्यबादेशान्तं प्रदक्षिणीकृत्येति निष्पन्नं। हुताशं प्रदक्षिणीकृत्य भर्त्तारं प्रदक्षिणीकृत्य अरुंधतीं प्रदक्षिणीकृत्य धेनुं च प्रदक्षिणीकृत्येत्यर्थः॥ यद्वा प्रदक्षिणं च प्रदक्षिणं च प्रदक्षिणं च प्रदक्षिणं च प्रदक्षिणानि न प्रदक्षिणानि अप्रदक्षिणानि अप्रदक्षिणानि प्रदक्षिणानि संपद्यंते तथाभूतानि कृत्वेति प्रदक्षिणीकृत्य। ततो द्वितीयोत्तरं प्रदक्षिणीकृत्येति क्रियामाश्रित्य नृपस्यानुक्तत्वेन तृतीयासंभवेपि तस्या गौणत्वेन तत्र तृतीया न भवति किंतु प्रथमाऽस्ति ॥ प्रतस्थे इति मुख्ययाऽऽख्यातक्रियया कर्तुरुक्तत्वाद्गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायादाख्यातक्रियया कर्तुरभिसंबंधः। इति प्रश्नद्वयसमाधानम् ॥

प्र०—'श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ॥ वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः' इति माघः। तत्र ननु कथं वसन् ददर्शेत्यत्र वर्तमानभूतकालिन्योर्वसन् ददर्शेति क्रिययोरेककालवाचित्वमिति ॥

उ०—'धातुसंबन्धे प्रत्ययाः' धात्वर्थानां संबन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः । तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्यया इत्यनेन वसन् ददर्शेति तिङन्तवाच्यक्रियायाः प्राधान्यात् तदनुसारेण वसन्निति गुणभूतक्रियावाचकपदेपि भूते लटः स्थानिकशत्रादेशो ज्ञेयः। अतीतवासकृष्णकर्तृकं दर्शनमर्थ इति समाधानम् ॥

प्र०—'स्फुटोपमं भूतिसितेन शंभुना' इति माघवाक्ये शंभुनेत्यत्र कर्तरि करणे सहार्थे वा तृतीयेति प्रश्नः ॥

उ०—अत्र कर्तरि तृतीया न संधत्ते क्रियासत्वाभावात् करणेपि न संभवति क्रियासिद्ध्युपकारकत्वस्यानुपपन्नत्वात् सहार्थेप्यत्र तृतीयायाः संभवो नास्ति शंभुना सह स्फुटा उपमा यस्येत्यर्थे सति शंभोरुपमेयत्वं नारदस्योपमानत्वं स्यादिति विरुद्धार्थत्वात्। अतोऽत्र 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' इति सूत्रेण वैकल्पिकषष्ठ्यपवादिका तदर्थावबोधिका तृतीया बोध्या। अत्राऽतुलोपमाभ्यामिति निषेधात्कथमुपमाशब्दयोगेऽनेन तृतीया स्यादिति चेत् अत्र सदृशार्थवाचितुलोपमाशब्दयोगे निषेधेऽपि सादृश्यार्थवाच्युपमाशब्दयोगे तृतीया स्यादेव। कृष्णस्य कृष्णेन वा सदृश इतिवदत्र शंभुना शंभोः स्फुटा उपमा सादृश्यं यस्येत्यर्थो ज्ञेयः ॥

लोको लोलविलोललोचनचलद्राजीवरम्यप्रभ-
श्चञ्चद्रुक्ममयांशुको भवहरः पूर्णेन्दुबिम्बाननः ॥
नानालंकृतिराजितो हरिरसौ हारिप्रसादिर्विभुः
सर्वेशो बलरामदासमुनये देयात्सदा दर्शनम् ॥

॥ इति श्रीमद्धिमलैकान्तधर्मप्रवर्तकश्रीसहजानन्द-
प्यबलरामदासमुनिविरचितः काव्यादिगतप्रश्नोत्त-
समाप्तिमगमत् ॥